मत्कर्मकृन्मत्परमो मद्भक्तः संगवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पांडव ॥५५॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूपदर्शनं नामैकादशोऽध्यायः ॥५६॥

રીતે ના બની શકે અને) અભણુ હોય તેણે श्रीकृष्ण यनमः એમ કહી પાંચ વખત પાણી ચડાવવું અને પછી એજ મંત્રથી કંકુ વગેરે અર્પણુ કરી ચોખા ચડાવી, પાંચ પ્રદક્ષિણા કરી એક માળા એજ મંત્રથી ફેરવવી. (પ્રદક્ષિણા કોઈ સુજ્ઞ પાસેથી શીખવી ઉત્તમ છે) શિવમાર્ગવાળી વિધવાએ श्रीनमः शिवाय મંત્રથી ઉપર બતાવ્યા પ્રમાણે કરી, પોતાના પતિના સ્વર્ગવાસનું ચિંતન કરતાં કહેવું કે હવે પછી હું એજ સ્વામીને [1]મળું અને તેમને બધી રીતે અનુકૂળ રહી મોક્ષ મેળવું, એવી મારી માંગણી છે. પ્રદક્ષિણા ૧૦૮ મૂળ મંત્રથી કરી તુલસીની સામે બેસી ત્રણુ માળા મોક્ષને માટે પતિના ચિન્તન સાથે ફેરવવી. (સંક્ષેપ [2]પૂજા બનેતો કરવી.) મોક્ષ સિવાય બીજી ઇચ્છાએ જે કાંઈ કરે છે તેને જન્મ અવશ્ય છે. એમ સમજવું. કારણુ કે જડભરત તેને સહેજ પ્રેમને લીધે અવતાર લેવો પડયો હતો તો કામ્યકર્મથી તો નક્કીજ અવતાર થાય છે માટે કામ્યકર્મ કરતા પહેલાં વિચારવું.

૧ આપણા હિંદુ શાસ્ત્રોમાં પ્રમાણો છે કે પુનર્જન્મ છે, અને તે ચિંતનની દ્રઢતા ઉપરજ આધાર રાખે છે, તો રહેલા સંસ્કારને નવી યોનીમાં ભોગવવા કરતાં અર્પણુ કરેલા સંકલ્પો સાથે અધુરૂં પુરૂં કરવું ઉત્તમ છે.

૨ આગળ બતાવેલી તુળસી પૂજા વિધિપૂર્વક થઇ શકે એમ ન હોયતો નીચે મુજબ કરવું.

॥ अर्जुन उवाच ॥

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१॥

॥ श्री भगवानुवाच ॥

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥

---

य नमः । श्रीमाधवाय नमः । हस्तप्रक्षालनम्–श्रीगोविंदायनमः ( એમ કહી હાથ ધોવા. )

'श्रीमंगलनाम '=श्रीमन्महागणाधिपतयेनमः । श्रीलक्ष्मी नारायणाभ्यां नमः । श्रीउमामहेश्वराभ्यां नमः । श्रीमाता पितृचरणकमलेभ्यो नमः ॥ श्रीपतिचरणारविन्दाभ्यां नमः ॥

'श्रीमंगलप्रार्थना '–विनायकंगुरुंभानुं ब्रह्माविष्णुमहेश्वरान् सरस्वतीं प्रणौम्यादौसर्वकार्यार्थसिद्धये ॥ सर्वेष्वारंभकार्येषु त्रयस्त्रिभुवनेश्वराः ॥ देवा दिशन्तु नः सिद्धिं ब्रह्मेशानजनार्दनाः॥

( પછી સંકલ્પ કરવો )ઇત્યાદી મમ, આત્મનઃ પુરાણોક્ત ફલ પ્રાપ્ત્યર્થે તથાચ મમભર્ત્રાસહ અખંડિત, સુખ સૌભાગ્યૈશ્વર્યાભિવૃદ્ધિદ્વારા શ્રીતુલસી દેવતા પ્રીત્યર્થં વૃંદાવને યથાશક્તિ યથાવિધિ તુલસીપૂજનમહં કરિષ્યે.

(સુવાસીનીએ આ પ્રમાણે) (વિધવાઓએ માત્ર શ્રી પરમેશ્વર પ્રીત્યર્થે) પછી તુલસીનું ધ્યાન કરવું.

'ध्यायेच्चतुलसीं देवींश्यामांकमललोचनाम् ॥
प्रसन्नां पद्मवदनां वराभय चतुर्भुजाम् ॥ १ ॥
किरीटहार केयूर कुंडलादि विभूषणां ॥
धवलांकुशसंयुक्तां पद्मासननिषेविताम् ॥ २ ॥
प्रियांच सर्वदा विष्णोः सर्व देवनमस्कृतां' ॥ ३ ॥
श्री तुलस्यैनमः ध्यायामि ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ।
सर्वत्रगमचिंत्यं च कूटस्थमचलं ध्रुवम् ॥३॥
संनियम्येंन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥४॥

ઉપરના શ્લોક ભણી ધ્યાન કરવું. પછી જળ વગેરે ચઢાવી ચંનદ પુષ્પ, ધુપ, દીપ, નૈવેદ્ય વગેરેથી પૂજા કરવી. પછી તુલસીની પ્રદક્ષિણા કરી. તુલસીપ્રાર્થના કરવી. (જુઓ પાને. ૨૫૬)

श्री

'स्त्रीणां देवतार्चनविधिः' स्मृत्यन्तरे–स्त्रीशूद्रोऽनुपनीतश्च वेदमन्त्रान्विवर्जयेत् ॥ (अतःस्त्रीभिःकलौ पुराणविधिना देवतार्चनादिकं कर्त्तव्यम् ॥ वैशषिककार्यसमये देवतार्चनादौ तु पतिना सह वेदोक्तकर्मणिस्त्रीणामधिकारः । स्त्रीभिर्ब्राह्मणं पुरस्कृत्य अष्टादशपुराणानि श्रोतव्यानि ) ॥

'प्रदक्षिणविधिः––स्त्रीभिः प्रदक्षिणा कार्या विष्णुमग्निं गुरुं तथा । जितेन्द्रिया जितप्राणा नाममन्त्रं समुच्चरेत् ॥

'स्त्रीणां धर्मपाळनात्फलम्' अन्यच्च–एते वैविधिना प्रोक्ताः स्त्रीणां धर्माःसनातना । ते नौकाः परमाः प्रोक्ता भवसंसारतारणे ॥

## अथ श्री[1] तुलसीपूजाप्रयोगः

आचमनम्ः (નેત્રને જળનો સ્પર્શ કરવો) श्री केशवायनमः। श्री

* (૧) શુદ્ધ થયેલી સ્ત્રીઓએ દાતણ કર્યા પછી હાથીદાંતની કાંસકીથી વાળ ઓળીને અંબોડો વગેરે વાળીને હળદર કુંકુંમ આદિ અલંકાર ધારણ કરીને પછી નિત્ય મૌનથી સ્નાન કરવું સ્નાન કર્યા પછી ધોયલાં કપડાં અગર કાંચળી પહેરીને (વીધવા સ્ત્રીઓએ કેવળ સફેદ વસ્ત્ર પહેરવું) ગૃહકૃત્યમાં અડચણ ન આવે તેવી રીતે પુરાણોકત વિધી પ્રમાણે તુલસી પૂજા કરવી (૨) સ્ત્રીઓએ આચમનને બદલે જળથી નેત્રને સ્પર્શ કરવો.

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥

---

नारायणायनमः । माधवायनमः ॥ 'हस्त प्रक्षालनम्–गोविंदाय नमः ( इति करं प्रक्षाल्य ) विष्णवेनमः ( इति नेत्रयोरुदक-स्पर्शनम् ) ॥ ' श्री मङ्गलनाम '–श्रीमन्महागणाधिपतये नमः । श्रीलक्ष्मीनारायणाभ्यांनमः । श्रीउमामहेश्वराभ्यांनमः । वाणी-हिरण्यगर्भाभ्यांनमः । शचीपुरन्दराभ्यां नमः कुलदेवताभ्यो नमः । ग्रामदेवताभ्योनमः स्थानदेवताभ्योनमः वास्तुदेवताभ्यो नमः । मातापितृचरणकमलेभ्योनमः । पतिचरणारविन्दाभ्यां नमः । सर्वेभ्योदेवेभ्यो नमः । सर्वेभ्यो ब्राह्मणेभ्योनमोनमः । निर्विघ्नमस्तु । दीर्घमायुरस्तु ॥ 'श्री मङ्गलप्रार्थना'–सुमुखश्चैकद-न्तश्च कपिलोगजकर्णकः । लम्बोदरश्चविकटोविघ्ननाशोगणाधिपः धूम्रकेतुर्गणाध्यक्षोभालचन्द्रोगजाननः । द्वादशैतानि नामानियः पठेच्छृणुयादपि । विद्यारम्भे विवाहेच प्रवेशे निर्गमे तथा ॥ संग्रामे संकटे चैव विघ्नस्तस्य न जायते । शुक्लाम्बरधरंदेवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनंध्यायेत्सर्वविघ्नोपशांतये । अभीप्सितार्थ सिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ सर्वमङ्गलमाङ्गल्ये शिवेसर्वार्थसाधिके । शरण्येत्र्यम्बके गौरि नारायणि नमोऽस्तुते ॥ सर्वदा सर्व-कार्येषु नास्ति तेषाममङ्गलम् । येषांहृदिस्थो भगवान् मङ्गलायतनो हरिः । तदेवलग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवरश्यामः

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥
मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत उर्ध्वं न संशयः ॥ ८ ॥

हृदयस्थो जनार्दनः ॥ विनायकं गुरुं भानुं ब्रह्माविष्णु महेश्वरान् सरस्वतीं प्रणौम्यादौ सर्वकार्यार्थसिद्धये ॥ यत्रयोगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ सर्वेष्वारम्भ कार्येषुत्रयस्त्रि भुवने श्वराः । देवादिशन्तुनः सिद्धिं ब्रह्मेशान जनार्दनाः ॥ 'सङ्कल्पः' विष्णवेनमः । विष्णुर्विष्णु र्विष्णुः श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञयाप्रवर्तमानस्य अद्य ब्रह्मणः द्वितीये परार्धे श्रीश्वेतवाराह कल्पे अष्टाविंशति तमे कलियुगे कलिप्रथमचरणे भारतवर्षे ( भारत खण्डे ) जम्बुद्वीपे दण्डकारण्ये देशे ( संवत्सरायन ऋतु मास पक्षतिथि वासर नक्षत्र योग प्रातःकालादिनामान्यनुकीर्त्य) ममाऽत्मनः पुराणोक्तफलप्राप्त्यर्थम् तथा चमम भर्त्रासह अखण्डितसुख सौभाग्यैश्वर्याभिवृद्धिद्वारा श्रीतुलसीदेवताप्रीत्यर्थं वृन्दावने यथाशक्ति तुलसी पूजनमहं करिष्ये.

'*कलशपूजनम्'—गङ्गेच यमुनेचैव गोदावरि सरस्वति । नर्मदे सिंधु कावेरि जलेऽस्मिन्सन्निधिंकुरु कलस्थ वरुण देवतायै नमः । सकल पूजा परिपूरणार्थे गन्धाक्षत पुष्पाणि समर्पयामि नमस्करोमि । अस्मिन्कलशे सर्वाणि तीर्थानि आवाहयामि स्थापयामि कल्पयामि नमस्करोमि ॥ '+पूजाद्रव्यप्रोक्षणम्' अपवित्रः

(*) कलश सुदकेनसंपूर्यतीर्थानि प्रार्थयेत् ॥ (+) अनेन मन्त्रेण तुलसीदलेन कलशोदकं गृहीत्वा पूजाद्रव्याणि सम्प्रोक्ष्य तद्वदा त्मानं सम्प्रोक्षेत् ॥

अथ चित्तं समाधातुं न शक्नोषि मयिस्थिरः ।
अभ्यासयोगेन ततो मामिच्छाप्तुंधनंजय ॥ ९ ॥
अभ्यासेऽप्यसमर्थोसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन्सिद्धि मवाप्स्यसि ॥ १० ॥

---

पवित्रोऽत्वा सर्वावस्थां गतोऽपिवा । यःस्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ 'श्रीगरुड पूजनम्' आगमार्थं तु देवानां गमनार्थं तु रक्षसाम् । कुरु घण्टे महानादं देवतार्चनसन्निधौ ॥ घण्टास्थगरुडदेवतायै नमः सकलपूजापरि पूरणार्थंगन्धपुष्पाणि समर्पयामि नमस्करोमि ॥ ' दीपपूजनम ' दीपस्त्वं ब्रह्मरुपोऽसि ज्योतिषां प्रभुरव्ययः । सौभाग्यं देहि पुत्रांश्च सर्वान्कामांश्च देहिमे । दीपदेवताभ्योनमः । सकल पूजा परिपूरणार्थे गन्धाक्षतपुष्पाणि समर्पयामि नमस्करोमि ॥ ' श्रीतुलसीध्यानम् ' ध्यायेच्च तुलसींदेवीं श्यामां कमललोचनाम् । प्रसन्नां पद्मवदनां वराभयचतुर्भुजाम् किरीटहारकेयूर कुण्डला दिवि भूषणाम् । धवलाङ्कुशसंयुक्तां पद्मासननिषेविताम् । प्रियांच सर्वदा विष्णोः सर्वदेवनमस्कृताम् ॥ श्रीतुलस्यै नमः ध्यायामि ॥ 'आवाहनम्' देवित्र्यैलोक्यजननि सर्वलोकैक पावनि । आगच्छ वरदे मातः प्रसीद तुलसि प्रिये । श्री तुलस्यै नमः आवाहयामि ॥ ' आसनम '—सर्व देव मये देवि सर्वदा विष्णु वल्लभे । देवि स्वर्णमयं दिव्यं गृहाणासन मव्यये । श्रीतुलस्यैनमः आसनार्थे अक्षतान्समर्पयामि ' पाद्यम् '—सर्वदेवा यथा स्वर्गे तथा त्वं भुवि सर्वदा । दत्तं पाद्यं गृहाणेदं तुलसित्वं प्रसीदमे ॥ श्री तुलस्यैनमः पाद्यं समर्पयामि ॥ ' अर्घ्यम् '—गन्धपुष्पसमायुक्तं सर्वेषां प्रीतिदायकम् । अर्घ्यं गृहाण त्वंदेविदैत्यान्तकरणप्रिये ॥ श्रीतुलस्यैनमः अर्घ्यं समर्पयामि ॥ ' आचमनम् '—कर्पूरवासितं तोयं सुवर्ण कलशे

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥
श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफल त्यागस्त्यागाच्छांतिरनंतरम् ॥ १२ ॥

---

स्थितम् । दत्तमाचमनीयं च गृहाण हरिवल्लभे ॥ श्रीतुलस्यै नमः। आचमनं समर्पयामि ॥ 'स्नानम्'—गंङ्गासरस्वतीरेवापयोष्णी नर्मदा जलैः । स्नापितासि मया देवि तथा शांतिं कुरुष्वमे ॥ श्रीतुलस्यै नमः। स्नानं समर्पयामि ॥ 'पञ्चामृतस्नानम्'—पञ्चामृतं मयाऽनीतं पयोदधिघृतं मधु।सहशर्करया देविस्नानार्थं प्रतिगृह्यताम् ॥श्रीतुलस्यैनमः। पञ्चामृतस्नानं समर्पयामिपंञ्चामृतस्नानान्ते शुद्धोदकस्नानं समर्पयामि। शुद्धोदकस्नानान्ते आचमनं समर्पयामि। सकल पूजा परिपूरणार्थे गन्धाक्षत पुष्पाणि समर्पयामि॥(निर्माल्यं विसृज्य पुनश्च गन्धाक्षतपुष्पाण्यर्पयित्वानन्तरमभिषेकंकुर्यात् ) ॥ यथा—'अभिषेकः'—कृष्णा सरस्वति काली तुङ्गभद्रा शची तथा । भागीरथी पार्वतीच रमा नारायणी कृपी । सुभद्रा द्रौपदी साध्वी माता चैवाप्य रुन्धती । सावित्री कालिका ऽहल्या स्नापयिष्यन्तु सर्वदा । आभिः कृताभिषेका त्वं ददाभि गुरु सौभगम् । अतस्त्वां स्नापयिष्यामि तुलसि विष्णुवल्लभे । शान्तिः शान्तिः सुशान्तिर्भवतु ॥ अमृताभिषेकोऽस्तु ॥ श्रीतुलस्यैनमः अभिषेकं समर्पयामि । अभिषेकान्ते आचमनं समर्पयामि ॥ 'वस्त्रम्'—क्षीरोदमथनोद्भूते चन्द्रलक्ष्मी सहोदरे । गृह्यतां परिधानार्थे मिदं क्षौमाम्भरं शुभे । श्रीतुलस्यैनमः वस्त्रं (वस्त्राऽभावे अक्षतान् ) समर्पयामि ॥ 'कञ्चुकीमुपवस्त्रम्'—कञ्चुकीमुपवस्त्रंच नानारत्नैः समन्वितम् । गृहाणत्वं मयादत्तंतुलसिभयहारिणि श्रीतुलस्यैनमः । कञ्चुकीमुपवस्त्रं ( कञ्चुक्युपवस्त्राऽभावे अक्षतान्)

अद्वेष्टासर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मे भक्तः स मे प्रियः ॥ १४ ॥

---

समर्पयामि ॥ 'कुङ्कुमं'—केशराऽगुरु संयुक्त चन्द नादि समन्वितम् । कस्तूरिकासमायुक्तं कुङ्कुमं प्रतिगृह्यताम् ॥ श्रीतुलस्यै नमः कुङ्कुमं समर्पयामि ॥ 'अक्षतान्'—अक्षतांश्च महादेवि तुलसि सौख्यदायके । अर्पयामि सदाभक्त्या सुखसन्तति लब्धये । तुलस्यै नमः। अक्षतान् समर्पयामि ॥ 'सौभाग्य द्रव्यम्' हरिद्रा कुङ्कुमं चैव सिन्दूरं कज्जलान्वितम् । मया निवेदितं भक्त्या गृहाण परमेश्वरि । श्रीतुलस्यै नमः सौभाग्य द्रव्यं समर्पयामि ॥ 'पुष्पाणि' माल्यादीनि सुगन्धीनी मालत्यादीनि सत्तमे । मयाहृतानि पूजार्थं पुष्पाणि प्रतिगृह्यताम् ॥ श्री तुलस्यै नमः पुष्पाणि समर्पयामि ॥ 'धूपम्'—वनस्पतिरसोद्‌भूतो गन्धाढ्यो गन्ध उत्तमः ॥ आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् । श्रीतूलस्यैनमः धूपं समर्पयामि ॥ 'नीराजनम्' वैश्वानर प्रज्वलितं घृतकार्पाससनिर्मितम् । दीपं भक्त्या गृहाणेदं त्रैलोक्यध्वान्तनाशके । श्री तुलस्यैनमः नीराजनं दर्शयामि ॥ '+नवेद्यम्' ।—अन्नं चत्तर्विधं स्वादुरसैः षड्भिः समन्वितम् । नैवेद्यार्थेऽर्पयामि त्वां तुलसिमाधवप्रिये । प्राणायनमः । अपानायनमः । व्यानायनमः । समानाय नमः । उदानाय नमः । श्री तुलस्यै नमः । नैवेद्यंसमर्पयामि ॥ नैवेद्यान्ते आचमनं समर्पयामि । मध्ये पानीयं 'उतरापोशनं' हस्तप्रक्षालनं, मुखप्रक्षालनं [illegible]र्थे चन्दनं च समर्पयामि ॥ 'फलम्'—इदं फलं मयादेवि स्थापितं [illegible]रतस्तव । तेन मे सफलावाप्तिर्भ-

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारंभपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

वेज्जन्मनि जन्मनि । श्री तुलस्यै नमः 'फलं समर्पयामि ' ॥ ' ताम्बूलम् '—पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । कर्पूरैला-समायुक्तं ताम्बूलं प्रतिगृह्यताम् ॥ श्रीतुलस्यै नमः ताम्बूलं समर्पयामि ॥ 'दक्षिणा'—हिरण्य गर्भगर्भस्थं हेमबीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छमे । श्रीतुलस्यै नमः दक्षिणां समर्पयामि ॥ '*कर्पूरारार्तिक्यम् ' नीराजयामि सततं हरिवल्लभे वै कर्पुरवर्तिभिरलं सुखदायकत्वाम् । पादौ भजाम्य-विरतं तव देवि माये वंशाय सौख्यमपि देहि बलं च पूर्णम् ॥ श्रीतुलस्यैनमः। कर्पूरारार्तिक्यं समर्पयामि ॥ '+प्रदक्षिणा'—यानि कानिच पापानि जन्मान्तर कृतानि च । तानि सर्वाणि नश्यन्ति प्रदक्षिण पदे पदे । प्रदक्षिणामन्त्रः'—नमस्ते गार्हपत्याय नमस्ते दक्षिणाग्नये । नम आहवनीयाय तुलस्यै ते नमो नमः । श्रीतु-लस्यै नमः । प्रदक्षिणां समर्पयामि ॥ ' मन्त्रपुष्प युक्तो नम-स्कारः'—विष्णुप्रिय करे देवि तुलसिसुखदायके । पुष्पाञ्जलिम् प्रयच्छाभि पतेरापुष्पवर्द्धके । श्रीतुलस्यै नमः । मन्त्रपुष्पाञ्जलिं युक्तं नमस्कारं समर्पयामि ॥ विशेषार्घ्यः—गन्धप्रसूनसंयुक्तं फलमुद्रादिशोभितम् । अर्घ्यं ददामि तुलसि तव प्रीत्यै नमो नमः ॥ श्री तुलस्यै नमः । विशेषार्घ्यं समर्पयामि ॥ 'प्रार्थना—सौभाग्यं सन्ततिं देवि धनं धान्यं च मे सदा । आरोग्यं शोक शमनं कुरु मे माधवप्रिये । अभीष्टफलसिद्धिं च सदा देहि हरिप्रिये । देवैस्त्वं निर्मिता पूर्वमर्चितासि मुनीश्वरैः । अतो मां

योो न हृष्यति न द्वेष्टि न शोचति नकांक्षति ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः संगविवर्जितः ॥ १८ ॥

---

सर्वदा भक्त्या कृपादृष्ट्या विलोकय । पतेरायुश्च भाग्यं च सदा देहि हरिप्रिये । पूतनाभय सन्त्रासाद्रक्षितश्च यथा हरिः । तथा संसार सन्त्रासाद्रक्ष मे वंशमुत्तमम् ॥ श्री तुलस्यै नमः । प्रार्थनां समर्पयामि ॥ ' अर्पणम् '—अनेन मया यथाशक्त्या पूजनेन श्री तुलसीदेवता प्रीयतांन मम ॥ श्रीकृष्णार्पणमस्तु ॥

॥ इतिश्री तुलसी नित्य पूजाप्रयोगः ॥

## ॥ तुलसीकवचम् ॥

श्रीगणेशाय नमः ॥ अस्य श्री तुलसीकवचस्तोत्रमंत्रस्य । श्रीमहादेव ऋषिः । अनुष्टुप्छन्दः । श्री तुलसी देवता । मनई-प्सितकामनासिद्ध्यर्थे जपे विनियोगः । तुलसि श्रीमहादेवि नमः पंकजधरिणि । शिरो मे तुलसी पातु भालं पातु यशस्विनी ॥१॥ दृशौ मे पद्मनयना श्रीसखी श्रवणे मम । घ्राणं पातु सुगंधा मे मुखं च सुमुखी मम ॥ २ ॥ जिह्वां मे पातु शुभदा कंठं विद्या-मयी मम । स्कंधौ कह्लारिणी पातु हृदयं विष्णुवल्लभा ॥ ३ ॥ पुण्यदा मे पातु मध्यं नाभिं सौभाग्यदायिनी । कटिं कुंडलिनी पातु उरू नारदवंदिता ॥४॥ जननी जानुनी पातु जंघे सकल-वंदिता । नारायणप्रिया पादौ सर्वांगं सर्व रक्षिणी ॥५॥ संकटे विषमे दुर्गे भये वादे महाहवे । नित्यं हि संध्ययोः पातु तुलसी सर्वतः सदा ॥ ६ ॥ इतीदं परमं गुह्यं तुलस्याः कवचामृतम् । मर्त्यानाममृतार्थाय भीतानामभयाय च ॥७॥ मोक्षाय च मुमुक्षूणां

तुल्यनिंदास्तुतिर्मौनी संतुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥
ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२० ॥
इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा० भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

ध्यायिनां ध्यानयोगकृत् । वशाय वश्यकामानां विद्यायै वेदवादिनाम् ॥ ८ ॥ द्रविणाय दरिद्राणां पापिनां पापशांतये ॥९॥ अन्नाय क्षुधितानां च स्वर्गाय स्वर्गमिच्छताम् । पशव्यं प[illegible]कामानां पुत्रदं पुत्रकांक्षिणाम् ॥ १० ॥ राज्याय भ्रष्टराज्यानामशांतानां च शांतये । भक्त्यर्थं विष्णुभक्तानां विष्णौ सर्वांतरात्मनि ॥११॥ जाप्यं त्रिवर्गसिद्ध्यर्थं गृहस्थेन विशेषतः । उद्यंतं चंडकिरणमुपस्थाय कृतांजलिः ॥१२॥ तुलसीकानने तिष्ठन्नासीनो वा जपेदिदम् । सर्वान्कामानवाप्नोति तथैव मम सन्निधिम् ॥ १३ ॥ मम प्रियकरं नित्यं हरिभक्तिविवर्धनम् । या स्यान्मृतप्रजा नारी तस्या अंगं प्रमार्जयेत् ॥ १४ ॥ सा पुत्रं लभते दीर्घजीविनं चाप्यरोगिणम् । वंध्याया मार्जयेदंगं कुशैर्मंत्रेण साधकः ॥ १५ ॥ साऽपि संवत्सरादेव गर्भं धत्ते मनोहरम् । अश्वत्थे राजवश्यार्थी जपेदग्नेः सुरूपभाक् ॥१६॥ पलाशमूले विद्यार्थी तेजोर्थ्यभिमुखो रवेः । कन्यार्थी चंडिकागेहे शत्रुहत्यै गृहे मम ॥१७॥ श्रीकामो विष्णुगेहे च उद्याने स्त्री वशा भवेत् । किमत्र बहुनोक्तेन शृणु सैन्येश तत्त्वतः ॥ १८ ॥ यं यं काममभिध्यायेत्तं तं प्राप्नोत्यसंशयम् । मम गेहगतस्त्वं तु तारकस्य वधेच्छया ॥ १९ ॥ जपन्स्तोत्रं च कवचं तुलसीगतमानसः । मंडलात्तारकं हंता भविष्यसि न संशयः ॥ २० ॥ इति श्रीब्रह्मांडपुराणे तुलसीमाहात्म्ये तुलसीकवचं नामस्तोत्रम् ॥

अत्र क्षिप्तः ॥

अर्जुन उवाच ॥

प्रकृतिं पुरुषंचैव क्षेत्रं क्षेत्रज्ञमेव च ॥
एतद्वेदितुमिच्छामिज्ञानं ज्ञेयं च केशव ॥

श्रीभगवानुवाच ॥

इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते ।
एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥

---

## ॥ तुलसीस्तोत्रम् ॥

श्रीगणेशाय नमः ॥ जगद्धात्रि नमस्तुभ्यं विष्णोश्च प्रियवल्लभे । यतो ब्रह्मादयो देवाः सृष्टिस्थित्यंतकारिणः ॥ १ ॥ नमस्तुलसि कल्याणि नमो विष्णुप्रिये शुभे । नमो मोक्षप्रदे देवी नमः संपत्प्रदायिके ॥ २ ॥ तुलसी पातु मां नित्यं सर्वापद्भ्योपि सर्वदा । कीर्तितापि स्मृता वापि पवित्रयति मानवम् ॥ ३ ॥ नमामि शिरसा देवीं तुलसीं विलसत्तनुम् । यां दृष्ट्वा पापिनो मर्त्या मुच्यंते सर्वकिल्बिषात् ॥ ४ ॥ तुलस्या रक्षितं सर्वं जगदेतच्चराचरम् । या विनिर्हन्ति पापानि दृष्टा वा पापिभिर्नरैः ॥ ५ ॥ नमस्तुलस्यतितरां यस्यै बध्वा बलिं कलौ । कलयंति सुखं सर्वं स्त्रियो वैश्यास्तथापरे ॥ ६ ॥ तुलस्या नापरं किंचिद्दैवतं जगतीतले । यया पवित्रितो लोको विष्णुसंगेन वैष्णवः ॥ ७ ॥ तुलस्याः पल्लवं विष्णोः शिरस्यारोपितं कलौ । आरोपयति सर्वाणि श्रेयांसि वरमस्तके ॥ ८ ॥ तुलस्यां सकला देवा वसंति सततं यतः । अतस्तामर्चयेल्लोके सर्वान्देवान्समर्चयन् ॥ ९ ॥ नमस्तुलसि सर्वज्ञे पुरुषोत्तमवल्लभे । पाहि मां सर्वपापेभ्यः सर्वसंपत्प्रदायिके ॥ १० ॥ इति स्तोत्रं पुरा गीतं

क्षेत्रज्ञं चापिमां विद्धि सर्वक्षेत्रेषु भारत ।
क्षेत्रक्षेत्रयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ॥ २ ॥
तत्क्षेत्रंयच्च यादृक् च यद्विकारि यतश्च यत् ॥
सचयो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥

पुंडरीकेण धीमता । विष्णुमर्चयता नित्यं शोभनैस्तुलसीदलैः ॥ ११ ॥ तुलसीश्रीमहालक्ष्मी विंद्याविद्या यशस्विनी । धर्म्या धर्मानना देवी देवदेवमनःप्रिया ॥ १२ ॥ लक्ष्मीः प्रियसखी देवी द्यौर्भूमिरचला चला । पोडशैतानि नामामि तुलस्याः कीर्तयेन्नरः ॥ १३ ॥ लभते सुतरां भक्तिमंते विष्णुपदंलभेत् । तुलसी भूर्महालक्ष्मीः पद्मिनी श्रीर्हरिप्रिया ॥१४॥ तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे ॥ नमस्ते नारदनुते नारायणमनःप्रिये ॥ १५ ॥
इति श्रीपुंडरीककृतं तुलसी स्तोत्रं संपूर्णम् ।



"श्री सत्य"

## "श्री परमेश्वर परंबोध."

आलस्यं हि मनुष्याणां शरीरस्थो महारिपुः ॥
॥ नास्त्युद्यम समो बन्धुः कृत्वायं नावसीदति ॥ १ ॥

અઃ—આલસ્ય એ મનુષ્યના શરીરમાં રહેલો મોટો શત્રુ છે. જો તેને દુર કરીએ તો ઉધમ સમાન કોઇ બંધુ નથી, કેમકે તે કરવાથી મનુષ્ય દુઃખી થતું નથી.

सानंदं सदनं सुताश्च सुधियः कान्ता मृदुभाषिणी ।
स्वेच्छापूर्णधनं स्वयोषितिरातिः स्वाज्ञापराः सेवकाः ।
आतिथ्यं विष्णुचिंतनं प्रतिदिनं मिष्टान्नपानं गृहे ।
साधोर्मैत्र्य मरोगिताच सततं धन्यो गृहस्थाश्रमः ॥

ऋषिभिर्बहुधा गीतं छंदोभिर्विविधैः पृथक् ।
ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥
महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च ॥
इंद्रियाणि दशैकं च पंच चेंद्रियगोचराः ॥५॥

---

અઃ—આનંદ યુક્ત ઘર, સારી બુદ્ધિવાળા પુત્ર, મધુર બોલનારી સ્ત્રી, ઇચ્છા પૂર્ણ થઇ શકે તેટલું ધન, માત્ર પોતાની સ્ત્રીમાં પ્રીતિ, આજ્ઞા પાળનાર ચાકર, પરોણાગત, પ્રતિ દીવસ ઇશ્વર ચિંતન, ઘરમાં રૂચતાં અન્નપાણી, સજ્જનની મિત્રતા, તથા નીરંતર નીરોગીપણું, એટલાએ ગ્રહસ્થાશ્રમ ધન્ય જાણવો.

હરેક માણસે સત્સંગરૂપી સારાં કર્મ કરી પોતાના દીવસ પરમાર્થ બુદ્ધિથી નિર્ગમન કરવામાંજ શ્રેય છે.

(વીચારસાગરમાંથી.)

दैविद्यानि विभूति इश्वर करो सर्वे अविद्यापरिः ।
सत्कर्म फलनो सुयोगकरिने दे जो मति पांसरी ॥
अभ्युदित आ जगत सुविचरे, वेदान्त मार्गे सदा ।
पामे मुक्ति स्वधर्म पूर्ण करि सौ अत्यंत जे सूखदा ॥

### પ્રભુ ભજનમાં ઢીલ ન કરવા વિષે.

આજ કહે મેં કલ ભજુ, કાલ કહે પુની કાલ;
આજ કાલ તેં કરત નહી, અવસર જાસી ચાલ.
શ્વાસે શ્વાસે રામ ભજ, મીથ્યા શ્વાસ મત ખોય;
ના જાનું એ શ્વાસકી, આવન ફીર ન હોય.
તુલશી વિલંબ ન કીજીએ, ભજ લીજે રઘુવીર,
તન તરકસ તેં જાત હે, શ્વાસ સારખે તીર.
પાવ પલકકી ખબર નહી, કરે કલકી બાત,
જીવ ઉપર જમ ફીરત હે, જયું તેતર પર બાજ.
કહુતા હું કહે જાત હું, કહા બજાકે ઢોલ,
શ્વાસા ખાલી જાત હે, તીન લોકકા મોલ.

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ॥
एतत्क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥
अमानित्वमदंभित्वमहिंसा क्षांतिरार्जवम् ॥
आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥
इंद्रियार्थेषु वैराग्यमनहंकार एव च ॥
जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥

---

કાલ કરતો આજ કર, આજ કરતો અબ;
અવસર વીતો જાત હે, ફીર કરોગે કબ.
એ દુનીઆમે આય કે, છોડ દેહી તું એંટ,
લેના હોયસો લેહીલે, ઉઠ જાત હે પેંઠ.

॥अन्नं न निन्द्यात्। अन्नं बहु कुर्वीत अन्नाद्भूतानि जायंते जातान्यन्नेन वर्धन्ते। अन्नं हि भूतानां ज्येष्ठं। तस्मात्सर्वौषधमुच्यते॥

---

"શ્રી સત્ય" શ્રીં૦ શ્રી સદ્‌ગુરૂભ્યોનમઃ

શ્રી નર્મદાયૈનમઃ

શ્રી નર્મદાયૈ નમઃ પ્રાત નર્મદાયૈ નિશિ નમઃ
નમોસ્તુ નર્મદે તુભ્યં ત્રાહિમાં વિષ સર્પતઃ
હે નર્મદા ! તવચર્ણે નમી, માગુ સર્વદા એક
સદ્દ બુદ્ધિ મુજપર બક્ષો, ધરી ઉમંગે ટેક.
નર્મદા મુજને આપજો, સર્વદા ભીક્ષા નેક
તારણ કારણ મુજને ધરો, બદ્રી પુરણ પ્રેમ.

असक्तिरनभिष्वंगः पुत्रदारगृहादिषु ॥
नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥
मयि चान्ययोगेन भक्तिरव्यभिचारिणी ॥
विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥

---

श्री.

## प्रातःस्मरण.

प्रातःस्मरामि भवभीतिहरं सुरेशं ।
गंगाधरं वृषभवाहनमंबिकेशम् ॥
खट्वांगशूल वरदाभयहस्तमीशं ।
संसाररोगहरमौषधमद्वितीयम् ॥ १ ॥
प्रातर्नमामि गिरिशं गिरिजार्धदेहं ।
सर्गस्थितिप्रलयकारणमादिदेवम् ॥
विश्वेश्वरं विजितविश्वमनोभिरामं ।
संसाररोगहरमौषधमद्वितीयम् ॥ २ ॥
प्रातर्भजामि शिवमेकमनंतमाद्यम् ।
वेदांत वेद्यमखिलं पुरुषं महांतम् ।
नामादिभेदरहितं षड्भावशून्यं ।
संसाररोगहरमौषधमद्वितीयम् ॥ ३ ॥
प्रातःसमुत्थाय शिवं विचिंत्य ।
श्लोकत्रयं येऽनुदिनं पठंति ॥
ते दुःखजालं बहु जन्मसंचितम् ।
हित्वापदं यांति तदेव शंभोः ॥ ४ ॥



अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥
एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥
ज्ञेयं यत्तप्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥

---

## ॥ पुण्यश्लोकजनस्तुति ॥

( आचारमयुखे. )

पुण्यश्लोको नलोराजा पुण्यश्लोको युधिष्ठिरः ॥
पुण्यश्लोकाच वैदेही पुण्यश्लोको जनार्दनः ॥
अहल्या द्रौपदी सीता तारा मन्दोदरी तथा ।
पञ्च कन्या स्मरेन्नित्यं महापातक नाशनम् ।

( पृथ्वी क्षमा )

समुद्र वसने देवि पर्वत स्तनमंडिते ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्वमे ॥

## तीर्थ प्रार्थना.

( નહાતી વખતે )

गङ्गेच यमुने चैव गोदावरी सरस्वति ।
नर्मदे सिन्धो कावेरि जलेस्मिन् सन्निधिं कुरु ॥
नन्दिनी नलिनी सीता मालती च मलापहा ।
विष्णुपादाब्जसंभूता गङ्गा त्रिपथगामिनी ॥
भागीरथी भोगवती जान्हवी त्रिदशेश्वरी ।
द्वादशैतानि नामानि यत्रयत्रजलाशये ॥
स्नानोद्यतः पठेद्यत्र तत्रैव निवसाम्यहम् ॥
एतान् मंत्रानूपठित्वान्ते सर्वाङ्गस्नानमाचरेत् ॥
मार्कण्डेय पुराणे-शिरस्नानंच कुर्वीत दैवं पित्र्यमथी पिवा॥

सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ॥
सर्वतः श्रुतिमल्लोके सर्वमावृत्यतिष्ठति ॥ १३ ॥
सर्वे[illegible]णाभासं सर्वेन्द्रियविवर्जितम् ॥
असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

---

## ॥ आदित्यस्य द्वादश नामानि ॥

॥ १ श्रीमित्रायनमः ॥ २ श्रीरवयेनमः ॥ ३ श्रीसूर्याय नमः ॥ श्रीभानवेनभः ॥ ५ श्रीखगायनमः ॥ ६ श्रीपूष्णेनमः ॥ ७ श्रीहिरण्यगर्भायनमः ॥ ८ श्रीमरीचयेनमः ॥ ९ श्रीआदित्यायनमः ॥ १० श्रीसवित्रेनमः ॥ ११ श्रीअर्कायनमः ॥ १२ श्री भास्करायनमः ॥ श्रीसूर्यनार[illegible]यनमः ॥

॥ द्वादशादित्य नामानि प्रातःकाले पठेन्नरः ।
दुःस्वप्नं नाशनं चैव सर्वदुःखं विनश्यति ॥ १ ॥
॥ आदित्यस्य नमस्कारं ये कुर्वंति दिने दिने ।
॥ जन्मांतर सहस्रेषु दारिद्र्यं नोपजायते ॥ २ ॥

## ॥ सूर्याष्टकम् ॥

श्रीगणेशायनमः ॥ साम्बउवाच ॥ आदिदेव नमस्तुभ्यं प्रसीद मम भास्कर । दिवाकर नमस्तुभ्यं प्रभाकर नमोऽस्तुते ॥ ॥ १ ॥ सप्ताश्वरथमारूढं प्रचण्डं कश्यपात्मजम् । श्वेतपद्म धरं देवं तं सूर्यं प्रणमाम्यहम् ॥ २ ॥ लोहितं रथमारूढं सर्व लोकपितामहम् । महापापहरं देवं तं सूर्यं पणमाम्यहम् ॥ ३ ॥ त्रैगुण्यं च महाशूरं ब्रह्म विष्णु महेश्वरम् । महापाप हरं देवं तं सूर्यं प्रणमाम्यहम् ॥ ४ ॥ बृंहितं तेजःपुंजं च वायुराकाशमेवच । प्रभुस्त्वं सर्व लोकानां तं सूर्यं प्रणमाम्यहम् ॥ ५ ॥ बंधूकपुष्पसंकासं हारकुंडलभूषितम् । कचक्रधरं एदेवं तं

बहिरंतश्च भूतानामचरंचरमेव च ॥
सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चांतिकेच तत् ॥ १५ ॥
अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥
भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥

---

सूर्यं प्रणमाम्यहम् ॥ ६ ॥ तं सूर्यं जगत्कर्तारं महा तेजः प्रदीपनम् ॥ महापाप हरं देवं तं सूर्यं प्रणमाम्यहम् ॥ ७ ॥ तं सूर्यं जगतांनाथं ज्ञान विज्ञान मोक्षदम् । महापाप हरं देवं तं सुर्यंप्रणमाम्यहम् । ८ । सूर्याष्टकं पठेन्नित्यं ग्रहपीडाप्रणाशनम्। अपुत्रो लभते पुत्रं दरिद्रो धनवान्भवेत् ॥ ९ ॥ आमिषं मधुपानंच यः करोति रवेर्दिने । सप्तजन्म भवेद्रोगी जन्मजन्म दरिद्रता ॥ स्त्रीतैल मधुमांसानि यस्त्यजेत्तु रवेर्दिने । नव्याधिशोकदारिद्र्यं सूर्यलोकं सगच्छति ॥ ११ ॥

॥ इति श्रीशिवप्रोक्तं सूर्याष्टकं समाप्तम् ॥

(જમી ઉઠયા પછી બોલવાનું).

अन्नपूर्णे सदापूर्णे शंकर प्राणवल्लभे ।
ज्ञान वैराग्य सिद्ध्यर्थं भिक्षां देहिच पार्वति । ३ ।
माताच पार्वती देवी, पिता देवो महेश्वरः ।
बांधवाः शिवभक्ताश्च, स्वदेशो भुवनत्रयम् ॥ ४ ॥
वासनाद् वासुदेवस्य वासितं भुवनत्रयम् ।
सर्वभूतनिवासोसी वासुदेव नमोऽस्तुते ॥ ५ ॥

## ॥ दीपस्तुति. ॥

( સાયંકાળે. )

दीपोज्योतिःपरब्रह्म दीपोज्योतिर्जनार्दनः ।
दीपो हरतुमे पापं सन्ध्यादीप नमोऽस्तुते ॥

ज्योतिषामपितज्ज्योतिस्तमसःपरमुच्यते ॥
ज्ञानंज्ञेयं ज्ञान गम्यं हृदि सर्वस्य धिष्ठितम् ॥ १७ ॥
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ॥
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥

---

शुभं करोति कल्याणमारोग्यं सुख संपदाम् ।
शत्रुबुद्धि विनाशंच दीपोज्योति र्नमोऽस्तुते ॥

## ॥ सुखशायिनां स्मरणम् ॥

( સુતીવખતે )

अगस्तिर्माधवश्चैव मुचुकुन्दो महाबलः ।
कपिलो मुनिरास्तिकः पश्चैते सुखशायिनः ॥
इतरः—नर्मदायै नमः प्रातर्नर्मदायै निशिनमः ॥
नमोऽस्तु नर्मदे तुभ्यं त्राहिमां विषसर्पतः ॥
सर्पापसर्प भद्रंते दूरं गच्छ महाविष ।
जनमेजयस्य यज्ञान्ते आस्तिकवचनं स्मर ॥
आस्तिकवचनं श्रुत्वा यःसर्पो न निवर्तते ।
शतधाभिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ॥

## ॥ श्रीगणपतिर्जयति ॥

## ॥ श्रीसंकष्टनाशनं गणेशस्तोत्रम् ॥

॥ नारद उवाच ॥ प्रणम्य शिरसा देवं गौरीपुत्रं विनायकं । भक्तावासं स्मरेन्नित्यं आयुःकामार्थसिद्धये ॥ १ ॥ प्रथमं वक्रतुंडं च एकदंतं द्वितीयम् । तृतीयं कृष्णपिंगाक्षं गजवक्त्रं चतुर्थकम् ॥ २ ॥ लंबोदरं पंचम च षष्ठं विकटमेव च । सप्तमं विघ्नराजं धूम्रवर्णं तथाष्टमम् ॥ नवमं भालचंद्रंच दशमंतु वि-

प्रकृतिं पुरुषं चैव विध्यनादी उभावपि ॥
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥
कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥
पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥

---

नायकम् । एकादशं गणपतिं द्वादशंतु गजाननम् ॥ ४ ॥ द्वादशैतानि नामानि त्रिसंध्यं यः पठेन्नरः । न च विघ्नभयं तस्य सर्वसिद्धिकरं प्रभो ॥ ५ ॥ विद्यार्थी लभते विद्यां धनार्थी लभते धनम् । पुत्रार्थि लभते पुत्रान् मोक्षार्थी लभते गतिम् ॥ ६ ॥ जपेद्गणपतिस्तोत्रं षड्भिर्मासैः फलं लभेत । संवत्सरेण सिद्धिंच लभते नात्र संशयः ॥ ७ ॥ अष्टानां ब्राह्मणानांच लिखित्वा यः समर्पयेत् । तस्य विद्या भवेत्सद्यो गणेशस्य प्रसादतः ॥ ८ ॥ इति श्री नारदपुराणे संकष्टनाशनं नाम गणपतिस्तोत्रं संपूर्णम् ॥

## ॥ अथ महालक्ष्म्यष्टकं प्रारंभः ॥

श्रीगणेशायनमः ॥ इंद्र उवाच ॥ नमस्तेऽस्तु महामाये श्रीपीठे सुरपूजिते शंखचक्रगदाहस्ते महालक्ष्मि नमोऽस्तुते ॥ १ नमस्ते गरुडारूढे कोलासुरभयंकरि ॥ सर्व पाप हरे देवि महालक्ष्मि नमोऽस्तुते ॥ २ ॥ सर्वज्ञे सर्ववरदे सर्वदुष्टभयंकरि ॥ सर्व दुःख हरे देवि महालक्ष्मि नमोऽस्तुते ॥ ३ ॥ सिद्धिबुद्धिप्रदे देवि भुक्तिमुक्ति प्रदायिनि ॥ मंत्रमूर्ते सदा देवी महालक्ष्मि नमोऽस्तुते ॥ ४ ॥ आद्यंतरहिते देवि आद्यशक्ति महेश्वरि ॥ योगजे योगसंभूते महालक्ष्मि नमोऽस्तुते ॥ ५ ॥ स्थूलसूक्ष्ममहारौद्रे महाशक्ति महोदरे ॥ महापापहरे देवि महालक्ष्मि नमोस्तुते पद्मासनस्थिते देवि परब्रह्मस्वरूपिणी ॥ परमेशि जगन्मात महा-

पुरुषः प्रकृतिस्थो हि भुंक्ते प्रकृतिजान्गुणान् ॥
कारणं गुणसंगोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥
उपद्रष्टानुमंता च भर्ता भोक्ता महेश्वरः ॥
परमात्मेति चाप्युक्तो देहेऽस्मिन्पुरुषः परः ॥ २२ ॥

---

लक्ष्मि नमोस्तुते ॥ ७ ॥ श्वेतांबरधरे देवि नानालंकारभूषिते॥ जगत्स्थितेजगन्मातर्महालक्ष्मिनमोऽस्तुते॥८॥महालक्ष्म्यष्टकंस्तोत्रं यःपठेद्भक्तिमान्नरः॥सर्वसिद्धिमवाप्नोति राज्यं प्राप्नोति सर्वदा ॥ ९ ॥ एककाले पठेन्नित्यं महापापविनाशनम् ॥ द्विकालं यः पठेन्नित्यं धनधान्य समन्वितः ॥ १० ॥ त्रिकालं यः पठेन्नित्यं महाशत्रुविनाशनम् ॥ महालक्ष्मीर्भवेन्नित्यं प्रसन्न वरदाशुभा ॥ ११ ॥ इतींद्रकृतः श्रीमहालक्ष्म्यष्टकस्तवः संपूर्णः ॥

॥ श्री ॥

शुद्धां ब्रह्मविचार सारपरमां मायांजगद्व्यापिनीं ।
वीणा पुस्तकधारिणीमभयदां जाड्यांधकारापहाम् ॥
हस्ते स्फाटिकमालिकां विदधतीं पद्मासने संस्थितां ।
वंदेतां परमेश्वरीं भगवतीं बुद्धिप्रदां शारदाम् ॥१॥

## । सरस्वत्यष्टकम् ।

श्रीगणेशायनमः ॥शतानीक उवाच॥ महामते महाप्राज्ञ सर्वशास्त्रविशारद। अक्षीण कर्म बंधस्तु पुरुषो द्विज सत्तम ॥१॥ मरणे यज्जपे ज्जाप्यं पंचभाव मनुस्मरन् । परंपदमवाप्नोति तन्मे ब्रूहि महामुने ॥ २ ॥ शौनक उवाच । इदमेव महाराज पृष्टवांस्ते पितामहः । भीष्मं धर्म विदां श्रेष्ठं धर्मपुत्रो युधिष्ठिरः ॥ ३ ॥ युधिष्ठिर उवाच । पितामह महाप्राज्ञ सर्व शास्त्र विशारद । बृहस्पतिस्तुता देवी वागीशाय महात्मने । आत्मा-

य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ॥
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥
ध्यानेनात्मनि पश्यंति केचिदात्मानमात्मना ॥
अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥

---

नं दर्शयामास सूर्यकोटि समप्रभम् ॥ ४ ॥ सरस्वत्युवाच । वरं वृणीष्व भद्रंते यत्ते मनसिवर्तते । बृहस्पति रुवाच । यदिमेव-रदादेविदिव्यंज्ञानं प्रयच्छनः ॥ ५ ॥ देव्युवाच । हंत ते निर्मलं ज्ञानं कुमति ध्वंसकारकम् । स्तोत्रेणानेनयेभक्त्यामांस्तुवंतिमनीषिणः ॥ ६ ॥ बृहस्पति रुवाच । लभते परमं ज्ञानं यत्सुरैरपि दुर्लभम् । प्राप्नोति पुरुषोनित्यं महामायाप्रसादतः ॥ ७ ॥ सरस्वत्युवाच । त्रिसंध्यं प्रयतो नित्यं पठेदष्टकमुत्तमम् । तस्यकंठे सदावासं करिष्यामि न संशयः ॥ ८ ॥ इति-श्री पद्मपुराणे दिव्यज्ञानप्रदायकं सरस्वत्यष्टक स्तोत्रं संपूर्ण ॥

## ॥ शिवाष्टकं प्रारंभः ॥

श्रीगणेशायनमः । प्रभुं प्राणनाथं विभुं विश्वनाथं जगन्नाथनाथं सदानंदभाजम् । भवद्भव्यभूतेश्वरं भूतनाथं शिवं शंकरं शंभुमीशानमीडे ॥ १ ॥ गले रुंडमालं तनौ सर्पजालं महाकालकालं गणेशाधिपालम् । जटाजूटगंगोत्तरंगैर्विशालं शिवं शंकरं० ॥ २ ॥ मुदामाकरं मंडनं मंडयंतं महामंडलं भस्मभूषाधररंतम् अनादिं ह्यपारं महामोहमारं शिवं शंकरं० ॥ ३ ॥ तटाधोनिवासं महाट्टाट्टहासं महापापनाशं सदासुप्रकाशम् ॥ गिरीशं गणेशं सुरेशं महेशं शिवं शंकरं० ॥ ४ ॥ गिरींद्रात्मजासंगृहीतार्धदेहं गिरौ संस्थितं सर्वदासन्नगेहम् ॥ परब्रह्म ब्रह्मादिभिर्वंद्यमानं शिवं शंकरं० ॥ ५ ॥ कपालं त्रि-

अन्ये त्वे एवमजानंतः श्रुत्वान्येभ्य उपासते ॥
तेऽपि चातितरंत्ये व मृत्युं श्रुतिपरायणाः ॥ २५ ॥
यावत्संजायत किंचित्सत्वं स्थावरजंगमम्
क्षेत्र क्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥

---

शूलं कराभ्यां दधानं पदांभोजनम्रायकामं ददानम् । बलीवर्द-
यानं सुराणां प्रधानं शिवं शंकरम्० ॥ ६ ॥ शरच्चंद्रगात्रं
गुणानंदपात्रं त्रिनेत्रं पवित्रं धनेशस्य मित्रम् । अपर्णाकलत्रं
चरित्रं विचित्रम् शिवं शंकरम्० ॥ ७ ॥ हरं सर्पहारं चिता-
भूविहारं भवं वेदसारं सदानिर्विकारम् ॥ स्मशाने वसंतं मनोजं
दहंतं शिवं शंकरं० ॥ ८ ॥ स्तवं यः प्रभाते नरः शूलपाणेः
पठेत्सर्वदा भर्गभावानुरक्तः ॥ सपुत्रम् धनम् धान्य मित्रं कलत्रं
विचित्रः समासाद्य मोक्षं प्रयाति ॥ ९ ॥ इतिश्री शिवा-
ष्टकं संपूर्णम् ॥

## अथ शिवापराधक्षमापनस्तोत्रम्.

आदौकर्मप्रसंगात्कलयतिकलुषं, मातृकुक्षौस्थितंमां । वि-
ण्मूत्रामेध्यमध्येक्वथयतिनितरां, जाठरोजातवेदाः ॥ यद्यद्वैतत्र-
दुःखंव्यथयतिनितरां, शक्यतेकेनवक्तुं । क्षंतव्योमेपराधः; शिव
शिव शिव भो, श्रीमहादेव शंभो ॥ १ ॥ बाल्येदुःखातिरेकान्म
लल्लुलितवपुः, स्तन्यपानेपिपासा । नोशक्यश्चेंद्रियेभ्यो भवगुण
जनिता, जंतवो मां तुदंति ॥ नानारोगादिदुःखाद्रुदनपरवशः,
शंकरं न स्मरामि । क्षंतव्योमेपराधः; शिवशिवशिव भो, श्री-
महादेवशंभो ॥ २ ॥ प्रौढोहंयौवनस्थो, विषयविषधरैः, पंचभि-
र्मर्मसंधौ । दष्टोनष्टोविवेकः सुतधनयुवति, स्वादुसौख्येनि-
षण्णः ॥ शैवीचिंताविहिनं, ममहृदयमहो, मानगर्वाधिरुढं । क्षंत-

समं सर्वे षु भूतेषु तिष्ठंतं परमेश्वरम् ॥
विनश्यत्स्वविनश्यंतं यः पश्यति स पश्यति ॥ २७ ॥
समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥
न हिंनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥२८॥

---

व्योमेपराधः, शिवशिवभो, श्री महादेवशंभो ॥ ३ ॥ वार्द्धक्ये चेंद्रियाणांविगतगतिमतिश्चाधिदैवादितापैः । पापैरोगैर्वियोगैस्त्व-नवसितवपुः प्रौढिहीनंचदीनं ॥ मिथ्यामोहाभिलाषै भ्रंमतिमम मनो, धूर्जटेर्ध्यानशून्यं । क्षंतव्योमेपराधः शिवशिवशिवभो श्री महादेवशंभो ॥ ४ ॥ नोशक्यंस्मार्तकर्म, प्रतिपदगहनप्रत्यवाया कुलाख्यं ॥ श्रौतेवार्ताकथंमे, द्विजकुलविहिते, ब्रह्ममार्गेसुसारे ॥ ज्ञातोधर्मोविचारैः, श्रवणमननयोः, किंनिदिध्यासितव्यं । क्षंत-व्योमेपराधः शिवशिवशिवभो श्रीमहादेवशंभो ॥ ५ ॥ स्नात्वा प्रत्यूषकाले, स्नपनविधिविधौ,नाहृतंगांगतोयं । पूजार्थंवाकदाचि द्बहुतरगहनात्, खंडविल्वीदलानि ॥ नानीतापद्ममाला, सर-सिविकसिता; गंधपुष्पैस्त्वदर्थं । क्षतव्योमेपराधः, शिवशिवशि-वभो श्रीमहादेवशंभो ॥ ६ ॥ दुग्धैर्मध्वाज्ययुक्तैर्दधिसितसहितैः स्नापितंनैवलिंगं॥नोलिप्तंचंदनाद्यैः;कनकविरचितं, पूजितंनप्रसूनैः धूपैःकर्पूरदीपैर्विविधरसयुतैर्नैवभक्ष्योपहारैः । क्षंतव्योमेपराधः, शिवशिवशिवभो श्रीमहादेवशंभो ॥ ७॥ ध्यात्वाचित्तेशिवाख्यं, प्रचुरतरधनं, नैवदत्तंद्विजेभ्यो हव्यंतेलक्षसंख्यैर्हुतवहवदने, नार्पितं बीजमंत्रैः । नो तप्तं गांगतीरे व्रतजपनियमै रुद्रजाप्यैर्न वेदैः क्षंतव्यो मेऽपराधः शिव शिव० ॥ ८ ॥ स्थित्वा स्थाने सरोजे प्रणवमयमरुत्कुंडले सूक्ष्ममार्गे शांते स्वांते प्रलीने प्रक-टितविभवे ज्योतिरूपे पराख्ये । लिंगज्ञे ब्रह्मवाक्ये सकलतनु-गतं शंकरं न स्मरामि क्षतव्यो मेऽपराधः शिव शिव० ॥ ९ ॥

कुर्वाणानि च कर्माणि क्रियमाणानि सर्वशः ॥
यः पश्यति तथात्मानमकर्तारं स पश्यति ॥ २९ ॥
यदा भूतपृथग्भावमेकस्थमनुश्यति ॥
तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥

नग्नोनिःसंगशुद्धस्त्रिगुणविरहितो ध्वस्तमोहांधकारो । नासाग्रे न्यस्तदृष्टिर्विदितभवगुणो नैवदृष्टः कदाचित् ॥ उन्मन्याऽवस्थयात्वां विगतकलिमलं शंकरंनस्मरामि । क्षंतव्योमेऽपराधः शिवशिवशिवभो श्रीमहादेवशंभो ॥ १० ॥

चंद्रोद्भासितशेखरेस्मरहरे गंगाधरेशंकरे । सर्पैर्भूषितकंठकर्णविवरे, नेत्रोत्थवैश्वानरे ॥ दंतित्वकृतसुंदरांनरधरे त्रैलोक्यसारेहरे । मोक्षार्थंकुरुचित्तवृत्तिमचलामन्यैस्तु किं कर्मभिः ॥ ११ ॥ किंवानेनधनेनवाजिकरिभिः प्राप्तेन राज्येन किं । किंवा पुत्रकलत्रमित्रपशुभिर्देहेन गेहेनकिम् ॥ ज्ञात्वैतत्क्षणभंगुरं सपदिरे त्याज्यंमनोदूरतः । स्वात्मार्थं गुरुवाक्यतोभजभज श्री पार्वतीवल्लभम् ॥१२॥ आयुर्नश्यतिपश्यतांप्रतिदिनं यातिक्षयंयौवनम् । प्रत्यायांतिगताः पुनर्नदिवसाः कालोजगद्भक्षकः॥लक्ष्मीस्तोयतरंगभंगचपला. विद्युच्चलंजीवितं । तस्मान्मांशरणागतंशरणद त्वंरक्षरक्षाधुना ॥ १३ ॥

करचरणकृतंवाक्कायजंकर्मजंवा ।
श्रवणनयनजंवा, मानसंवापराधम् ॥
विहितमविहितंवा, सर्वमेतत्क्षमस्व ।
जयजयकरुणाब्धे, श्रीमहादेवशंभो ॥ १४ ॥

इतिश्रीमच्छंकराचार्यविरचितंशिवापराधक्षमापनस्तोत्रंसंपूर्णम् ।

---

...णत्वात्परमात्मायमव्ययः ॥
...रीरस्थोऽपि कौंतेय न करोति न लिप्यते ॥ ३१ ॥
यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते ॥
सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥ ३२ ॥

---

॥ अथ शिवपंचाक्षरस्तोत्र प्रारंभः ॥

नागेंद्रहाराय त्रिलोचनाय भस्मांगरागाय महेश्वराय ॥
नित्यायशुद्धायदिगंबराय तस्मैनकाराय नमःशिवाय ॥ १ ॥
मंदाकिनीसलिलचन्दनचर्चिताय नंदीश्वरप्रमथनाथमहेश्वराय ॥
मंदारपुष्पबहुपुष्पसुपूजिताय तस्मैमकाराय नमःशिवाय ॥ २ ॥
शिवायगौरीवदनाब्जवृंदसूर्याय दक्षाध्वरनाशकाय ॥
श्रीनीलकंठायवृषध्वजाय तस्मैशिकाराय नमःशिवाय ॥ ३ ॥
वसिष्ठकुंभोद्भवगौतमार्य मुनींद्रदेवार्चितशेखराय ॥
चंद्रार्कवैश्वानरलोचनाय तस्मैवकाराय नमःशिवाय ॥ ४ ॥
यक्षस्वरूपायजटाधराय पिनाकहस्ताय सनातनाय ॥
दिव्यायदेवायदिगंबराय तस्मैयकाराय नमःशिवाय ॥ ५ ॥
पंचाक्षरमिदंपुण्यंयःपठेच्छिवसन्निधौ ॥
शिवलोकमवाप्नोतिशिवेनसहमोदते ॥

इतिश्रीमच्छंकराचार्यविरचितंशिवपंचाक्षरस्तोत्रसंपूर्णम् ।

---

## दारिद्र्यदहनशिवस्तोत्रम्

श्रीगणेशायनमः ॥ विश्वेश्वराय नरकार्णवतारणाय कर्णामृताय शशिशेखरधारणाय । कर्पूरकांतिधवलाय जटाधराय दारिद्र्य दुःखदहनायनमः शिवाय ॥ १ ॥ गौरीप्रियाय रजनीशकला-धराय कालांतकाय भुजगाधिपकंकणाय । गंगाधराय गजराज विमर्दनाय दारिद्र्यदुःख० ॥ २ ॥ भक्तिप्रियाय भवरोगभया-

यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥
क्षेत्रं क्षेत्री तथाकृत्स्नं प्रकाशयति भारत ॥ ३३ ॥
क्षेत्रक्षेत्रज्ञयोरेवमंतरं ज्ञानचक्षुषा ॥
भूतप्रकृतिमोक्षं चये विदुर्यांति ते परम् ॥ ३४ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

प्रहाय उग्राय दुर्गभवसागरतारणाग । ज्योतिर्मयाय गुणनामसुनृत्यकाय दारिद्र्यदुःख० ॥३॥ चर्मांबरायशवभस्मविलेपनाय भालेक्षणाय मणिकुंडलमंडिताय । मंजीरपादयुगलाय जटाधराय दारिद्र्यदुःख ॥ ४ ॥ पंचाननाय फणिराजविभूषणाय हेमांशुकाय भुवनत्रयमंडिताय । आनंदभूमिवरदाय तमोमयाय दारिद्र्यदुःख ॥ ५ ॥ भानुप्रियाय भवसागरतारणाय कालांतकाय कमलासनपूजिताय । नेत्रत्रयाय शुभलक्षणलक्षिताय दारिद्र्यदुःख० ॥ ६ ॥ रामप्रियाय रघुनाथवरप्रदाय नागप्रियाय नरकार्णवतारणाय पुण्येषु पुण्यभरिताय सुरार्चिताय दारिद्र्यदुःख० ॥ ७ ॥ मुक्तेश्वराय फलदाय गणेश्वराय गीतप्रियाय वृषभेश्वरवाहनाय । मातंगचर्मवसनाय महेश्वराय दारिद्र्य दुःख० ॥ ८ ॥ वसिष्ठेन कृतंस्तोत्रं सर्वरोगनिवारणम् । सर्वसंपत्करं शीघ्रं पुत्रपौत्रादि वर्धनम् । त्रिसंध्यंयः पठेन्नित्य सहि स्वर्गमवाप्नुयात् ॥ ९ ॥

इति श्रीवसिष्ठविरचितं दारिद्र्यदहनस्तोत्रं संपूर्णम् ॥

---

श्री सत्य श्री सद्गुरुभ्यो नमः ॥

१॥ श्रीकेशवायनमः । नारायणनमः । माधवायनमः । गोविंदाय-

॥ श्री भगवानुवाच ॥

परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥
यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥
इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥
सर्गेऽपि नोपजायंते प्रलये न व्यथंति च ॥ २ ॥

---

नमः।विष्णवेनमः।मधुसूदनायनमः।त्रिविक्रमायनमः।वामनायनमः।
श्रीधरायनमः। हृषिकेशायनमः। पद्मनाभायनमः। संकर्षणायनमः।
वासुदेवायनमः।प्रद्युम्नायनमः।अनिरुद्धायनमः। पुरुषोत्तमायनमः।
अधोक्षजायनमः।नारसिंहायनमः। अच्युतायनमः। जनार्दनायनमः।
उपेंद्रायनमः।हरयेनमः। श्रीकृष्णायनमः।। इतिचतुर्विंशति नामानि

श्रीकृष्णाय वासुदेवाय हरये परमात्मने ।
प्रणतक्लेशनाशाय गोविंदाय नमोनमः ॥ १ ॥
ईश्वरं सर्व भूतानां, वंदे भूतमयं प्रभुम् ।
पतिनाम पठेद्दिव्यं, वैष्णवं खलु पाप हम् ॥ २ ॥

॥ सप्तश्लोकी गीता. ॥

श्रीगणेशायनमः । ओमित्येकाक्षरं ब्रह्म व्याहरन्मा मनुस्मरन् । यः प्रयातित्यजन्देहं सयाति परमांगतिम् ॥ १ ॥ स्थाने हृषीकेश तव प्रकीर्त्याजगत्प्रहृष्यत्यनुरज्यते च । रक्षांसि भीतानि दिशोद्रवंति सर्वेनमस्यंति च सिद्धसंघाः ॥२॥ सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्यतिष्ठति ॥ ३ ॥ कविंपुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः । न्सर्वस्यधातारमचिन्त्यरूपमादित्यवर्णंतमसः परस्तात् ॥ ४ ॥ ऊर्ध्वमूलमधःशाखमश्वत्थंप्राहुरव्ययम् । छंदांसियस्यपर्णानि यस्तंवेद सवेदवित् ॥ ५ ॥ सर्वस्यचाहंहृदि सन्निविष्टोमत्तः स्मृतिर्ज्ञानमपोहनंच । वेदैश्च सर्वैरहमेव वेद्योवेदांतकृद्वेदविदेव

मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥
संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥
सर्वयोनिषु कौंतेय मूर्तयः संभवंति याः ॥
तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥

---

चाहम् ॥ ६ ॥ मन्मना भव मद्भक्तो मद्याजीमांनमस्कुरु । मामे-
वैष्यसि युक्त्वैवमात्मानं मत्परायण ॥ ७ ॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्री कृष्णार्जुनसंवादे सप्तश्लोकी संपूर्णम् ॥

## । चतुःश्लोकी भागवतम् ।

श्रीगणेशायनमः । श्रीभगवानुवाच । ज्ञानं परमगुह्यं मे यद्वि-
ज्ञानसमन्वितम् । सरहस्यं तदंगंच गृहाण गदितंमया ॥ १ ॥
यावानहं यथा भावो यद्रूपगुणकर्मकः तथैव तत्त्वविज्ञानमस्तुते
मदनुग्रहात् ॥ २ ॥ अहमेवासमेवाग्रे नान्यद्यात्सदसत्परम् ।
पश्चादहं यदेतच्च योवशिष्येत सोस्म्यहम् ॥ ३ ॥ ऋतेऽर्थं
यत्प्रतीयेत नप्रतीयेत चात्मनि । तद्विद्यादात्मनो मायां यथाभासो
यथा तमः ॥ ४ ॥ यथा महांति भूतानि भूतेषूच्चावचे-
ष्वनु । प्रविष्टान्य प्रविष्टानि तथातेषु न तेष्वहम् ॥ ५ ॥ एता
वदेव जिज्ञास्यं तत्त्व जिज्ञासुनाऽत्मनः । अन्वयव्यतिरेकाभ्यां
यत्स्यात्सर्वत्र सर्वदा ॥६॥ एतन्मतं समातिष्ठ परमेण समाधिना ।
भवान्कल्पविकल्पेषु न विमुह्यति कर्हिचित् ॥ १ ॥

इति श्रीमद्भागवते महापुराणेऽष्टादश साहस्र्यां संहितायां वैयासिक्यां द्वितीयस्कंधे भगवद्ब्रह्मसंवादे चतुःश्लोकी भागवतं सं०

सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥
निबध्नंति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ॥
सुखसंगेन बध्नाति ज्ञानसंगेन चानघ ॥ ६ ॥

---

। आचार्यकृताच्युताष्टकम् ।

श्रीगणेशायनमः । अच्युतं केशवं रामनारायणं कृष्णदामोदरं वासुदेवंहरिम् । श्रीधरं माधवं गोपिकावल्लभं जानकीनायकं रामचंद्रं भजे ॥ १ ॥ अच्युतं केशवं सत्यभामाधवं माधवं श्रीधरं राधिकाऽराधितम् । इंदिरा मंदिरंचेतसा सुंदरं देवकीनंदनं नंदजं संदधे ॥ २ ॥ विष्णवे जिष्णवे शंखिने चक्रिणे रुक्मिणीरागिणे जानकीजानये । वल्लवीवल्लभायार्चितायात्मने कंसविध्वंसिने वंशिने ते नमः॥३॥कृष्ण गोविंद हे रामनारायण श्रीपते वासुदेवाजितश्रीनिधे । अच्युतानंत हे माधवाधोक्षज द्वारकानायक द्रोपदी रक्षक ॥ ४ ॥ राक्षसक्षोभितः । सीतया शोभितो दडकारण्यभूपुण्यताकारणः । लक्ष्मणेनान्वितो वानरैः सेवितोऽगस्त्यसंपूजितो राघवः पातु माम् ॥५॥ धेनुकारिष्टकोऽनिष्टकृद्वेषिणां केशिहा कंसहृद्वंशिकावादकः। पूतनाकोपकःसुरजाखेलनो बालगोपालकः पातु मां सर्वदा ॥ ६ ॥ विद्युदुद्योतवान्प्रस्फुरद्वाससं प्रावृडंभोदवत्प्रोल्लसद्विग्रहम् । वन्यया मालया शोभितोरःस्थलं लोहितांघ्रिद्वयं वारिजाक्षं भजे ॥ ७ ॥ कुंचितैः कुंतलैर्भ्राजमानाननं रत्नमौलिं लसत्कुंडलं गंडयो । हारकेयूरकंकंकणप्रोज्ज्वलंकिंकिणीमंजुलं श्यामलं तं भजे ॥ ८ ॥ अच्युतस्याष्टकं यः पठेदिष्टदं प्रेमतः प्रत्यहं पूरुषः सस्पृहम् । वृत्ततः सुंदरं कर्तृ विश्वंभरं तस्य वश्यो हरिर्जायते सत्वरम् ॥ ९ ॥ इतिश्रीशंकराचार्यविरचितमच्युताष्टकं संपूर्णम् ॥

रजो रागात्मकं विद्धि तृष्णासंगसमुद्भवम् ॥
तन्निबध्नाति कौंतेय कर्मसंगेन देहिनम् ॥ ७ ॥

तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ॥
प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥

---

## नर्मदाष्टकम्.

### नाराचवृत्तम्.

सबिन्दुसिन्धुसुस्खलत्तरंगभंगरंजितं ।
द्विषत्सु पापजातजातकारिवारिसंयुतम् ॥
कृतान्तदूतकालभूतभीतिहारिवर्मदे ।
त्वदीयपादपंकजं नमामि देवि नर्मदे ॥ १ ॥

त्वदंबुलीनदीनमीनदिव्यसंप्रदायकं ।
कलौ मलौघभारहारि सर्वतीर्थनायकम् ॥
सुमत्स्यकच्छनक्रचक्रचक्रवाकशर्मदे त्वदीय० ॥ २ ॥.

महागभीरनीरपूरपापधूतभूतलं ।
ध्वनत्समस्तपातकारि दारितापदाचलम् ॥
जगल्लये महाभये मृकंडुसूनुहर्म्यदे त्वदीय० ॥ ३ ॥

गतं तदैव मे भयंत्वदंबु वीक्षितं यदा ।
मृकंडुसूनुशौनकासुरारिसेवि सर्वदा ॥
पुनर्भवाब्धिजन्मजं भवाब्धिदुःखवर्मदे त्वदीय० ॥ ४ ॥

अलक्षलक्षकिन्नरामरासुरादिपूजितं ।
सुलक्षनीरतीरधीरपक्षिलक्षकूजितम् ॥
वसिष्ठशिष्टपिप्पलादिकर्दमादिशर्मदे त्वदीय० ॥ ५ ॥

सत्त्वं सुखे संजयति रजः कर्मणि भारत ॥
ज्ञानमावृत्य तु तमः प्रमादे संजयत्युत ॥ ९ ॥
रजस्तमश्चाभिभूय सत्त्वं भवति भारत ॥
रजः सत्वं तमश्चैव तमः सत्वं रजस्तथा ॥ १० ॥

---

सनत्कुमारनाचिकेतकश्यपात्रिषट्पदै ।
धृतंस्वकीयमानसेषु नारदादिषट्पदैः ॥
रवीन्दुरन्तिदेवदेवराजकर्म शर्मदे । त्वदीय० ॥ ६ ॥

अलक्षलक्षलक्षपापलक्षसारसायुधं ।
तटस्थजीवजन्तुतन्तुभुक्तिमुक्तिदायकम् ॥
विरिंचिविष्णुशंकरस्वकीयधामवर्मदे । त्वदीय० ॥ ७ ॥

अहोऽमृतं स्वनं श्रुतं महेशकेशजातटे ।
किरातसूतवाडवेषु पण्डिते शठे नटे ॥
दुरन्तपापतापहारि सर्वजंतुशर्मदे । त्वदीय० ॥ ८ ॥

इदंतुनर्मदाष्टकं त्रिकालमेवयेसदा ।
पठन्ति ते निरंतरं न यान्ति दुर्गतिं कदा ॥
सुलभ्यदेहदुर्लभं महेशधामगौरवं ।
पुनर्भवानरा न वै विलोकयांति रौरवम् ॥ ९ ॥

इतिश्रीमच्छंकराचार्थविरचितं श्रीनर्मदाष्टकं संपूर्णम् ॥

## श्री रेव स्तोत्रं.

नतातोनमातानबंधुर्नदाता नपुत्रोनपुत्रीनभर्त्योनभर्ता । न जायानवित्तंनवृत्तिर्ममेव । गतिस्त्वंमतिस्त्वंत्वमेकामे रेवा ॥ १ ॥

सर्वद्वारे देहेऽस्मिन्प्रकाश उपजायते ॥
ज्ञानं यदा तदा विद्याद्विवृद्धं सत्वमित्युत ॥ ११ ॥
लोभः प्रवृत्तिरारंभः कर्मणामशमः स्पृहा ॥
रजस्येतानि जायंते विवृद्धे भरतर्षभ ॥ १२ ॥

---

नजानामिदानंनसंध्याभिधानं, नजानामि मंत्रंनचस्तोत्रयत्रं न जानामिपुजांनसंन्यास योगं गतिस्त्वं० ॥ २ ॥ भवाब्धावपारे-महादुःखभीरु, प्रपंचप्रमिक्राप्रलोभिप्रभात; कुमायाकुहुजुप्रबंधस-दाहं, गतिस्त्वं० ॥ ३ ॥ नजानामितीर्थंनजानामिपुण्यं, नजा-नामियुक्तालयंवाक्यमेतत्;नजानामिभक्त्याव्रतंचापिमातः,गतिस्त्वं ॥ ४ ॥ कुकर्मीकुसंगीकुबुद्धिहीनोकुदासः, कुलाचारहीनयदाचा-रहितः; कुदृष्टिकुवाक्यःसदाहंभजामि, गतिस्त्वं ॥ ५ ॥ प्रजेशंर-मेशंमहेशंसुरेशं, गणेशंदिनेशंनरेशंकदाचित्; नजानामिवान्यंश्र-रण्यंसदाहं, गतिस्त्वं० ॥ ६ ॥ विवादेविषादेप्रवादेप्रवासे, जले-चानलेपर्वतेशत्रुमध्ये अरण्येशरण्येसदाहंभजामि, गतिस्त्वं ॥७॥ अनाथोदरिद्रोजरारोगयुक्तो, महाक्षीणदीनःसदाजाड्यवक्ता विप-त्तिप्रविष्टोसदाहंभजामि गतिस्त्वं ॥८॥ इहपठतिभक्त्यास्तोत्रमे-तत्समंत्रंभवतिसुरभिपूज्योमाननीयोनृपाणां;बहुजनकुलभर्ता मुक्ति भागीकवीन्द्रो सकलभुवनमात स्त्राहिमांतेनमस्तु ॥ ९ ॥

इतिरेवास्तोत्रंसंपूर्णम् ॥ श्रीनर्मदार्पणमस्तु ॥

अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥
तमस्येतानि जायंते विवृद्धे कुरुनंदन ॥ १३ ॥
यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ॥
तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥

## अथ पंचायतन ध्यानानि.

शांताकारं भुजगशयनं पद्मनाभं सुरेशं विश्वाधारं गगनसदृशं मेघवर्णं शुभांगम् ॥ लक्ष्मीकांतं कमलनयनं योगिभिर्ध्यानगम्यं वंदे विष्णुं भवभयहरं सर्वलोकैकनाथम् ॥ १ ॥

ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशु मृगवराभीति हस्तं प्रसन्नम् ॥ पद्मासीनं समंतात् स्तुतममरगणैर्व्याघ्रकृत्तिंवसानंविश्वाद्यं विश्ववन्द्यं निखिल भयहरं पंचवक्त्रं त्रिनेत्रम् ॥ २ ॥

गजवदनमचिंत्यं तीक्ष्णदंष्ट्रं त्रिनेत्रं। बृहदुदरमशेषं भूतिराजं पुराणम् ॥ अमरवरसुपूज्यं रक्तवर्णं सुरेशं। पशुपति सुरपीशं विघ्नराजं नमामि ॥ ३ ॥

ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः। केयूरवान् मकरकुंडलवान् किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः ॥ ४ ॥

नमोदेव्यै महादेव्यै शिवायै सततं नमः। नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्मताम् ॥ ५ ॥

---

## ॥ अन्नपूर्णास्तोत्रम् ॥

॥ श्रीगणेशाय नमः ॥

नित्यानंदकरी वराभयकरी सौंदर्यरत्नाकरी निर्धूताखि-

रजसि प्रलयं गत्वा कर्मसंगिषुजायते ॥
तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥
कर्मणः सुकृतस्याहुः सात्विकं निर्मलं फलम् ॥
रजसस्तु फलंदुःखमज्ञानं तमसः फलम् ॥ १६ ॥

---

लघोरपावनकरी प्रत्यक्षमाहेश्वरी । प्रालेयाचलवंशपावनकरी काशीपुराधीश्वरी भिक्षां देहि कृपावलंबनकरी मातान्नपूर्णेश्वरी ॥ १ ॥ नानारत्नविचित्रभूषणकरी हेमांबराडंबरी मुक्ताहारवि-[illegible] लसद्वक्षोजकुंभांतरी । काश्मीरागुरुवासिता रुचिकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ २ ॥ योगानंदकरी रिपुक्षय करी धर्मार्थनिष्ठाकरी चंद्रार्कानलभासमानलहरी त्रैलोक्यरक्षाकरी । सर्वैश्वर्यसम[illegible]वांछितकरी काशीपुराधीश्वरी भिक्षां देहि० ॥३॥ कैलासाचलकंद[illegible]री गौरी उमा शंकरी कौमारी निगमार्थ-गोचरकरी ओंकारबीजाक्षरी । मोक्षद्वारकपाटपाटनकरी काशी-पुराधीश्वरी भिक्षां देहि० ॥ ४ ॥ दृश्यादृश्यप्रभूतवाहनकरी ब्रह्मांडभांडोदरी लीलानाटकसूत्रभेदनकरी विज्ञानदीपांकुरी । श्री विश्वेशमनःप्रस[illegible] काशीपुराधीश्वरी भिक्षां देहि० ॥ ५ ॥ उर्वी सर्वजनेश्वरी भगवती मातान्नपूर्णेश्वरी वेणीनीलसमानकुंत-लहरी [illegible]नेश्वरी । सर्वानंदकरी दशाशुभकरी काशीपुरा-धीश्वरी भिक्षां देहि० ॥ ६ ॥ आदिक्षांतिसमस्तवर्णनकरी शं-भोस्त्रिभावाकरी काश्मीरात्रिजलेश्वरी त्रिलहरी नित्यांकुरा शर्वरी । कामाकांक्षकरी जनोदयकरी काशीपुराधीश्वरी भिक्षां देहि० । ७ । देवी सर्वविचित्ररत्नरचिता दाक्षायणी सुंदरी वामं स्वादुपयो-धरप्रियकरी सौभाग्यमाहेश्वरी । भक्ताभीष्टकरी दशाशुभकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ८ ॥ चंद्रार्कानलकोटिकोटि-सदृशा चंद्रांशुबिंबाधरी चंद्रार्काग्निसमानकुंतलधरी चंद्रार्कवर्णे-

सत्वात्संजायते ज्ञानं रजसो लोभ एव च ॥
प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥
ऊर्ध्वं गच्छंति सत्वस्था मध्ये तिष्ठंति राजसाः ॥
जघन्यगुणवृत्तिस्था अधो गच्छंति तामसाः ॥ १८ ॥

श्वरी । मालापुस्तकपाशसांकुशधरी काशीपुराधीश्वरी भिक्षां देहि० ॥ ९ ॥ क्षत्रत्राणकरी महाऽभयकरी माता कृपासागरी साक्षान्मोक्षकरी सदा शिवकरी विश्वेश्वरश्रीधरी । दक्षाक्रंदकरी निरामयकरी काशीपुराधीश्वरी भिक्षां देहि० ॥ १० ॥ अन्नपूर्णे सदापूर्णे शंकरप्राणवल्लभे । ज्ञानवैराग्यसिद्ध्यर्थं भिक्षां देहि च पार्वति ॥ ११ ॥ माता च पार्वती देवी पिता देवो महेश्वरः। बांधवाः शिवभक्ताश्च स्वदेशो भुवनत्रयम् ॥ १२ ॥

॥ इति श्रीमच्छंकराचार्यविरचितमन्नपूर्णाष्टकस्तोत्रं संपूर्णम् ॥

## ॥ श्री गुरु चरण कमलेभ्यो नमः ॥

### નિત્ય ઉપાસનાની પદ્ધત. (રીત).

૧. તમારી હરરોજની પૂજા શરૂ કરતા પહેલાં તમારે નહાવું જોઇએ. પણ જો નહાવાથી તમારા શરીરને હાનિ પહોંચે એમ હોય તો તમારે નહાવાની જરૂર નથી પણ તે વખતે તમારાં કપડાં તમારે બદલવાં જોઇએ અને એક સ્વચ્છ વસ્ત્ર પહેરવું.

૨. કામળ અથવા તેવાજ બીજા કોઇ પવિત્ર આસન ઉપર તમે બેસો. અને ઘીનો દીવો અને ધૂપ ત્યાં આગળ એ વખતે રાખવાનો યત્ન કરવો, પછી થોડી મિનિટ સુધી ચુપકીથી બેસો અને દુનીઆદારીના સઘળા વિચારો મનમાંથી કાઢી નાંખવાનો યત્ન કરો પછી તમે સંધ્યા કરો પ તમને બ્રાહ્મણ સિવાય ) સંધ્યા ન આવડતી હોય તો ફક્ત થોડીક મિનિટ સુધી શાંતિથી મૌન ધારણ કરી દુનીઆદારીના વિચારોને દૂર કરી બેસી રહો.

नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति ॥
गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥
गुणानेतानतीत्य त्रीन्देही देहसमुद्भवान् ॥
जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

---

૩. પછી આચમન કરો (ત્રણ વખત) તે એવી રીતે કે પાણી તમારા હૃદયમાં પેસે અને તે આચમનથી જાણે કે તમે તદ્દન પવિત્ર હો એમ તમારા મનમાં તમે ધારો. આખી દુનીઆના ગુરૂ શ્રી જગદ્ગુરૂને તમારૂં શીશ નમાવીને નમસ્કાર કરો. તે ગુરૂ પરમાત્મા "શિવ" છે જે તમને સ્વચ્છ ભક્તિ આપનાર છે. આ ગુરૂને "શ્રી ગુરૂ ચરણ કમલેભ્યો નમઃ" (શ્રી ગુરૂના ચરણ રૂપી કમલને નમસ્કાર હો.) તે મંત્ર વડે માથું નમાવી નમસ્કાર કરો. આ મંત્ર ત્રણ વખત બોલો.

પછી હાથ જોડી નીચેનો મંત્ર બોલોઃ—

अज्ञान तिमिरान्धस्य, ज्ञानांजनशलाकया ।
चक्षुरून्मीलितं येन तस्मै श्री गुरुवेनमः ॥

(અજ્ઞાન રૂપી અંધકારથી જે મનુષ્ય આંધળો થયો છે તેવાં મનુષ્યના ચક્ષુ જે ગુરૂએ જ્ઞાનરૂપી સુરમાની લાકડી વડે ઉઘાડયાં છે તેવા શ્રી ગુરૂને નમસ્કાર હો)

પછી "શ્રી ગુરૂચરણ કમલેભ્યો નમઃ" એમ બોલી પગે લાગો. પછી આચમન ત્રણ વખત કરો.

૪. પદ્માસન અગર સિદ્ધાસન વાળીને બેસો પણ જો તે તમને ન આવડતું હોય તો તમારી મરજીમાં આવે તેવી રીતે બેસો.

ત્રણ વખત આચમન કરો. અને ત્રણ "પ્રાણાયમ" કરો. શ્રી ભગવાનના પવિત્ર ચરણનું ધ્યાન ધરો. તે તમારા હૃદયમાં જાણે કે અંગુઠા જેવડા બિરાજ્યા હોય એમ ધારો અને વળી

